## श्रीमुक्तिनाथ पीठ वेद विद्याश्रम, दिल्ली

लक्ष्य:- वेद, वेदाङ्ग, वेदान्त एवं विशिष्टाद्वैत सिद्धान्त के एक हजार विद्वान तैयार करना। अभी तक लगभग १०० छात्र निःशुल्क भोजन, आवास आदि के साथ शिक्षा ग्रहण कर रहे हैं।

## यतिराजप्रकाशनम्

लक्ष्यः- दुर्लभ एवं अप्रकाशित ग्रन्थ तथा स्तोत्र आदि का सरल भाषा में प्रकाशित कर जिज्ञासुओं को उपलब्ध कराना। जो लोग अपने व्ययभार से छपवाकर श्रद्धालुओं को निःशुल्क वितरण कराना चाहें वे यतिराजप्रकाशनम् से सम्पर्क करें।

### अभी तक प्रकाशित पुस्तकें-

१- ऋजुसिद्धान्तकौमुदी ( लघुसिद्धान्तकौमुदी का भी [illegible] संक्षिप्त रूप किन्तु सामान्य व्याकरण का ज्ञान कराने में [illegible]

२- वेदान्तसारः ( श्रीरामानुजस्वामी जी द्वारा प्रसादित, मूलमात्र )

३- नित्यानुसन्धानम् ( सुप्रभातम्, वरदवल्लभास्तोत्र, आलवन्दार, श्रीस्तव, मुकुन्दमाला आदि श्रीवैष्णवों के लिए अनुष्ठेय हिन्दी अनुवाद सहित १२ स्तोत्रों का संग्रह और विष्णुसहस्रनाम एवं लक्ष्मीस्तोत्र सहित )

प्राप्तिस्थानम्:- **यतिराजप्रकाशनम्**

**श्रीमुक्तिनाथ पीठ वेद विद्याश्रम**

6, मारवाड़ी घाट, कुदसिया घाट, बेला रोड़, दिल्ली-54

दूरभाष:- 011-23930776, 9810429487

---

।।श्रीमते रामानुजाय नमः।।

।।श्रियै नमः ।। श्रीधराय नमः।।

श्रीमद्यामुनाचार्यस्वामिविरचितः

# श्रीमद्गीतार्थसङ्ग्रहः

श्रीवेदान्तदेशिकानुगृहीतः

गीतार्थसङ्ग्रहरक्षासंवलितः

**यतिराजप्रकाशनम्**

श्रीमुक्तिनाथ पीठ वेद विद्याश्रमः

6, मारबाड़ी घाट, कुदसिया घाट, बेला रोड़, दिल्ली-54

સમશ્રીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।

જયતાજ્જ્ઞાનનો નાથો વેદવેદ્યો મહામતિઃ॥

श्रीमद्यामुनाचार्यस्वामिविरचितः-

# श्रीमद्गीतार्थसङ्ग्रहः

श्रीवेदान्तदेशिकानुगृहीतः-

**गीतार्थसङ्ग्रहरक्षासंवलितः**

प्रकाशकः-

## कृष्णप्रपन्नाचार्यः

सम्पादकः-

## गोविन्दाचार्यः

**प्राप्तिस्थानानि**

**१- यतिराजप्रकाशनम्**

**श्रीमुक्तिनाथ पीठ वेद विद्याश्रमः**

6, मारबाड़ी घाट, कुदसिया घाट, बेला रोड़, दिल्ली-54

दूरभाष:- 011-23930776, 9810429487

**२- अखण्डज्योति श्रीलक्ष्मीनारायण आश्रमः**

त्रिवेणी धाम, नवलपरासी, नेपाल

**३- श्रीलक्ष्मीनारायण मन्दिरम्**

कनकाई माईधार, झापा, नेपाल

**४- श्रीमुक्तिनाथ वेद विद्याश्रमः**

67, इण्डस्ट्रियल एरिया, फेस-1, चण्डीगढ;

**प्रथमावृत्तिः, १००० प्रतयः, गुरुपूर्णिमा २०६०**

**पुनः प्रकाशनाय सहयोगः १५/- पञ्चदशरुप्यकाणि**

## किञ्चिद्वक्तव्यम्

श्रियःपतिरखिलहेयप्रत्यनीककल्याणैकतानः स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपः, स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसङ्ख्येयकल्याणगुणगणमहोदधिः, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतसौन्दर्यसौकुमार्याद्यनन्तकल्याणगुणनिधिदिव्यरूपः, दिव्यास्त्रभूषणोज्ज्वलः, नित्यसूरिभिरनवरतमभिष्टूयमानचरणयुगलः परमव्योमनिलयः सकलजगदुदयविभवलयलीलः परंब्रह्म, पुरुषोत्तमो नारायण एव सर्वाराध्य उपायोपेयभूतश्च। अधर्मविनाशनधर्मस्थापनदुष्टदमनसाधुपरित्राणहेतुतया धृतावतारः श्रीकृष्णः सर्वोपनिषद्रूपगवां स्वयमेव दोग्धृत्वेन सकलमनुष्योपक्षितपार्थरूपवत्सभूतं गीतादुग्धं पाययामास। तत्रापि भगवद्यामुनाचार्यवर्यैर्गीतार्थसङ्ग्रहरूपघृतेन भगवद्दासानाप्लावयामास। ततोऽपि वादिभीतिकरैः कवितार्किककेसरिभिर्घृतस्य स्वादुत्वोत्कर्षाय गीतार्थसङ्ग्रहरक्षारूपविविधव्यञ्जनपरिवेषणेन शास्त्रतदवगम्यपरमपुरुषसक्तचित्तानास्वादयामास।

सम्प्रति दुर्लभस्यास्य ग्रन्थस्य जीर्णां प्रतिं कुतश्चित् संप्राप्य तत्प्रकाशनं कृत्वा श्रीसम्प्रदायजिज्ञासूनां समक्षं प्रस्तूयते। अत्र प्रकाशने अक्षरविन्यासे च काश्चन त्रुटयः सम्भवन्ति, तत्र क्षमाशीला नीरक्षीरविवेकिनो विद्वांसः सूचयित्वानुग्रहीष्यन्तीति प्रार्थ्यन्ते।

विदुषां वशंवदो दासानुदासः- **कृष्णप्रपन्नाचार्यः, देहली**

# आचार्यवैभवम्

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत्
परोपाध्यालीढं विवशमशुभस्यास्पदमिति।
श्रुतिन्यायापेतं जगति विततं मोहनमिदं
तमो येनापास्तं स हि विजयते यामुनमुनिः॥१॥
यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम्॥२॥
तस्मै रामानुजार्याय नमः परमयोगिने।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत्॥३॥
श्रीरङ्गमङ्गलमहोत्सववर्धनाय
वेदान्तपान्थपरमार्थसमर्थनाय।
कैङ्कर्यलक्षणविलक्षणमोक्षलक्ष्म्यै
रामानुजो विजयते यतिराजराजः॥४॥
श्रीमान् वेङ्कटनाथार्यकवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥५॥
कवितार्किकसिंहाय कल्याणगुणशालिने।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः॥६॥



श्रीमते रामानुजाय नमः

श्रीमद्यामुनमुनिप्रणीतः

## श्रीमद्गीतार्थसङ्ग्रहः

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम्।

---

स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः।
नारायणः परं ब्रह्म गीताशास्त्रे समीरितः॥१॥

---

श्रीमन्निगमान्तमहादेशिकविरचिता

## श्रीमद्गीतार्थसङ्ग्रहरक्षा

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥
मानत्वं भगवन्मतस्य महतः पुंसस्तथा निर्णयः
तिस्रः सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः।
गीतार्थस्य च सङ्ग्रहः स्तुतियुगं श्रीश्रीशयोरित्यमून्
यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः॥
श्रीमद्वेङ्कटनाथेन यथाभाष्यं विधीयते।
भगवद्यामुनेयोक्तगीतासङ्ग्रहरक्षणम्॥

तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः।
तत्त्वमेको महायोगी हरिर्नारायणः परः।।

(महाभारते शान्तिपर्वणि३४७.८३)

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा।।

(नारसिंहपुराणे १८.३४)

इत्यादिभिस्तत्त्वहितरूप समस्ताध्यात्मशास्त्रार्थसारं महर्षयः सञ्जगृहुः। तदेतदुभयं सर्वोपनिषत्सारसङ्कलनात्मिकायां भगवद्गीतायां प्रतिपाद्यतया प्रदर्शयन् तत्राप्युपनिषदां तत्त्वप्राधान्यस्य शारीरके सूत्रितत्वादिहापि तत्प्रधानतया व्यपदिशति। **स्वे धर्माः स्वधर्माः**:- स्ववर्णाश्रमनियत-शास्त्रार्थाः; **स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः** (गीता१८.४५) इति हि गीयते। स्वस्य धर्म इति समासेऽप्ययमेवार्थः।

**ज्ञानम्**- अत्र परशेषतैकरसयथावस्थिततात्मविषयम्।

**वैराग्यम्**- परमात्मव्यतिरिक्तेषु सर्वेषु विरक्तिः। **परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि** (नारदपरिव्राजकोपनिषदि-३) इति मुमुक्षोः स्वभावप्रतिपादनात्; तथा च पातञ्जलयोगानुसूत्रम्-

**दृष्टानुश्रविकविषयवितृष्णास्य वशीकारसंज्ञा वैराग्यम्** इति। कर्मयोगपरिकारभूतस्यापि वैराग्यस्य पृथगुपादानमपवर्गस्य तदन्वय-व्यतिरेकानुविधायित्वेन तत्प्राधान्यज्ञापनार्थं कन्दभूतरागनिवृत्त्या तन्मूलक्रोधादिसमस्तदोषनिवृत्तिज्ञापनार्थञ्च। तत्र स्वधर्मज्ञानयोः प्रथमं कर्मयोगज्ञानयोगरूपेणावस्थितयोरात्मसाक्षात्कारद्वारा भक्तियोगाधिकार-निर्वर्तकत्वेन तत्साधकम्। तदभिप्रायेणोक्तमात्मसिद्धौ-

**उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः** (आत्मसिद्धौ) इति। उत्पन्नभक्तियोगानामपि विशदतमप्रत्यक्ष-





समानाकारस्य तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपस्य आप्रयाणाद-नुवर्तनीयस्य अहरहरभ्यासाधेयातिशयस्य भक्तियोगस्य सत्त्वविवृद्धि-साध्यतया तद्विरोधिरजस्तमोमूलभूतपापनिर्वहणद्वारेण सत्त्वोपचयहेतु-तयोपकारकत्वादात्मयाथात्म्यज्ञानपूर्वकैः परित्यक्तफलसङ्ग-कर्तृत्त्वादिभिः परमपुरुषाराधनैकवेषैर्नित्यनैमित्तिककर्मभिर्भक्ते-रुपचीयमानत्ववेषेण साध्यत्वम्, तदेतत्सर्वमभिसन्धायोक्तं भगवता पराशरेण-

**इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।**
**ब्रह्मविद्यामधिष्ठाय तर्त्तुं मृत्युमविद्यया।।**

(वि.पु.६.६.१२) इति।

महनीयविषये प्रीतिर्भक्तिः। **प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते** (लैङ्गपुराणे-उत्तर.९.१९) इति वचनमपि पूज्यविषयविशेषनियतं योज्यम्। सैव वेदनोपासनध्यानादिशब्दैरध्यात्मशास्त्रेषु मोक्षोपायविधिवाक्यैः सामान्यतो विशेषतश्च प्रतिपाद्यते, गुरुलघुविकल्पानुपपत्तेः सामान्यशब्दानां समानप्रकरणोक्तविशेषविश्रमे च सम्भवति द्वारि-द्वारादिकल्पनायोगात्, विद्युपास्योर्व्यतिकरेणोपसंहारदर्शनात् **निदिध्यासितव्यः** (बृ. ४.४.५) इत्यस्य स्थाने विज्ञानशब्द-श्रवणाच्च, परमपुरुषवरणीयताहेतुभूतगुणविशेषवतैव लभ्यत्वश्रुतेश्च। एवं सति वेदनेतरमोक्षोपायनिषेधकश्रुतीनां **भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन! ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप** (गीता ११.५४) इत्यादिस्मृतीनाञ्चाविरोधः। तदेतदुक्तम्-

**भक्त्येकगोचरः**:- इति, भक्तेरेव गोचरो नान्यस्येत्यर्थः। एतेन कर्मसमुच्चयवाक्यार्थज्ञानादिपक्षाः प्रतिक्षिप्ताः। गोचरत्वमिह फलत्वेन ग्राह्यम्, **भक्त्येकलभ्ये पुरुषे पुराणे** (गारुडपुराणे पूर्वखण्डे २१९.३)

इत्यादिभिरैकः स्यात् भक्तियोगलभ्य इति स्वोक्तसंवादाच्च। उपायतया फलतया चैकस्यैवावलम्बनादैश्वर्याद्यर्थभक्तिव्यवच्छेदार्थं वात्रैकशब्दः। अत्र ह्यैश्वर्याद्यर्वाचीनपुरुषार्थग्रहणं भूमविद्यायामिव निरतिशयपुरुषार्थ-प्रतिपादनार्थम्। तदभिप्रायेण च भाष्यम्-

**परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतभक्तियोगमवतारयामास** (गीताभाष्ये उपोद्घातः) इति। यद्वा निरतिशयैश्वर्ययुक्ततया भक्त्यर्हत्वमिह तद्गोचरत्वम्। ऐकान्तिकत्वादिव्यञ्जनाय त्वेकशब्दः। **परावरज्ञं भूतानाम्** (गीताभाष्ये उपोद्घातः) इत्याद्युक्तपरावरतत्त्वनिश्चयेन अन्यभक्त्युन्मूलनाद-व्यभिचारेण अनन्यविषयत्वमैकान्तिकत्वम्। सातिशयनिरतिशय-पुरुषार्थविवेकेन तदेकभोग्यतया उत्तरावधिराहित्यमात्यन्तिकत्वम्। कारणवाक्यस्थानां सद्ब्रह्मादिसामान्यशब्दानां समानप्रकरणमहो-पनिषदादिपठिताबाधितासम्भवादत्यन्तरनारायणादिविशेषशब्दार्थविश्रमं व्यञ्जयितुं **नारायण परं ब्रह्म** इति विशेषतः सामान्यतश्च व्यपदेशद्वयम्। अनेनाविभक्तिकेऽपि नारायणानुवाकवाक्ये पूर्वापर-वाक्यच्छायानुसाराच्छाखान्तरसविसर्जनीयपठनाच्च व्यस्तत्वं व्यञ्जितम्। तेन च सर्वपरविद्योपास्यविशेषनिर्द्धारणार्थतया केवलपरतत्त्वप्रतिपादन-परनारायणानुवाकसिद्ध एवास्य शास्त्रस्य विषयः। तद्विभूतित्वेन ***विश्वमेवेदं पुरुषः*** (तै.ना.११.२) इति वत्समानाधिकरणतया तत्राम्नातानां ब्रह्मशिवेन्द्रादीनां नारशब्दार्थानामिहापि **ब्रह्माणमीशम्** (गीता-११.१५) इत्यादिभिस्तद्विभूत्येकदेशाश्रयत्वं प्रतिपाद्यत इति ख्यापितम्। उक्तं च स्तोत्रे-

**स्वाभाविकानवधिकातिशयेशितृत्वं**
**नारायण त्वयि न मृष्यति वैदिकः कः।**





**ब्रह्मा शिवः शतमखः परमस्वराडि-**
**त्येतेऽपि यस्य महिमार्णवविप्रुषस्ते॥** (स्तोत्ररत्ने ११) इति।

संवित्सिद्धौ च अद्वितीयश्रुतिव्याख्याने च दर्शितम्-

**यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूतले।**
**इति तत्तुल्यनृपतिनिवारणपरं वचः॥**
**न तु तत्पुत्रतद्भृत्यकलत्रादिनिवारकम्।**
**तथा सुरासुरनरब्रह्माण्डशतकोटयः॥**
**क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः।**
**ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः॥**
**विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुषः॥** इति।

पुरुषनिर्णये च एतत्प्रपञ्चो ग्राह्यः। तदेतद्व्यपदेशद्वयं **श्रियः पतिः** इत्यादिना प्रारम्भभाष्येण व्याकृतम्, अत एव हि तत्रापि-**परं ब्रह्म पुरुषोत्तमो नारायणः** इत्यन्तेन समभिव्याहृतम्। प्रपञ्चित-मेतदस्माभिस्तात्पर्यचन्द्रिकायामिति नात्र विस्तृणीमहे। निर्विशेषणस्यैव ब्रह्मशब्दस्य काष्ठाप्राप्तबृहत्त्वबृंहणत्वयोगिनि परमात्मन्येव योगरूढत्वे-ऽपि तस्मादन्यत्र जीवादौ तद्गुणलेशयोगादौपचारिकप्रयोग-रूढेस्तद्व्यवच्छेदाय **परम्** इति विशेषितम्। एवमेव ह्यन्यत्रापि विशिष्यते। व्योमातीतवादिमतनिरासार्थं वा परत्वोक्तिः। गीतैव तत्त्वहितयोर्यथावच्छासनात् **शास्त्रम्**। उपनिषत्समाधिना सिद्धव्यवहारनिरूढेः स्त्रीलिङ्गनिर्देशः, एतेन शास्त्रान्तरादस्य शास्त्रस्याधिक्यं व्यञ्जितम्। स्वयं च महाभारते महर्षिणोक्तम्-

**अत्रोपनिषदां पुण्यां कृष्णद्वैपायनोऽब्रवीत्** (आदिपर्वणि १.२७९) इति। उक्तं चाभियुक्तैः-

**यस्मिन् प्रसादसुमुखे कवयोऽपि ये ते**
**शास्त्राण्यशासुरिह तन्महिमाश्रयाणि।**
**कृष्णेन तेन तदिह स्वयमेव गीतं**
**शास्त्रस्य तस्य सदृशं किमिवास्ति शास्त्रम्॥** इति।

पञ्चमवेदे चास्यांशस्य प्राधान्यमुद्धृत्याहुः-

**भारते भगवद्गीता धर्मशास्त्रेषु मानवम्।**
**वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम्॥** इति।

**समीरितः**- सम्यगीरितः, अज्ञानसंशयविपर्ययप्रतिक्षेपेण परमप्राप्यत्वप्रापकत्वसर्वकारणत्वसर्वरक्षकत्वसर्वसंहर्तृत्वसर्वाधिकत्व-सर्वाधारत्वसर्वनियन्तृत्वसर्वशेषित्वसर्ववेदवेद्यत्वसर्वहेयरहितत्व-सर्वपापमोचकत्वसर्वसमाश्रयणीयत्वादिभिः स्वभावैः समस्त-वस्त्वन्तरविलक्षणतया पुरुषोत्तमत्वेन प्रतिपादित इत्यर्थः। समन्वयसूत्रवन्निरतिशयपुरुषार्थत्वविवक्षया वा समित्युपसर्गः। एवमनेन शास्त्रार्थः सङ्गृहीतः॥१॥

**ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते।**
**आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते॥२॥**

अथ त्रिभिः श्लोकैस्त्रयाणां षट्कानामर्थं सङ्गृह्णाति-ज्ञानात्मिका निष्ठा ज्ञानयोगः, कर्मात्मिकानिष्ठा कर्मयोगः। नितिष्ठत्यस्त्रर्थेऽधिकर्तव्यत्वेऽधिकारीति निष्ठा, नियता स्थितिरेव वा निष्ठा, यावत्फलं स्थिरपरिगृहीतमुपायानुष्ठानमित्यर्थः। अनयोः स्वरूपं व्यञ्जयिष्यति **कर्मयोगस्तपस्तीथ** इत्यादिना। योगलक्ष्ये-योगः साध्यतया लक्ष्यमुद्देश्यं ययोस्ते योगलक्ष्ये, अत्र कर्मनिष्ठया ज्ञाननिष्ठामारुह्य तया योगप्राप्तिरिति द्वैतीयः क्रमः। तार्तीयस्तु





ज्ञाननिष्ठाव्यवधानमन्तरेण कर्मनिष्ठयैव यावद्योगारम्भं दृढपरिगृहीतया अन्तर्गतात्मज्ञानतया शिष्टतया व्यपदेश्यानां लोकानुविधेयानुष्ठानाना-मितरेषामपि निष्प्रमादसुकरोपायसक्तानां योगावाप्तिरिति। योगो-ऽत्रासनादिविशेषपरिकरवान् साक्षात्कारार्थम् आत्मावलोकनापरनामा चित्तसमाधानविशेषरूपो व्यापारः, तत्साध्यसाक्षात्कार एव वा; तेन स्मृतिसन्ततिविशेषरूपात्स्वकारणभूतज्ञानयोगात्स्वकार्यभूतादात्मानुभवाच्च भेदः। **सुसंस्कृते** परमात्माधीनत्वतत्प्रीत्यर्थत्वफलान्तरसङ्गराहित्यादि-बुद्धिविशेषैः परिकर्मिते इत्यर्थः। आत्मानुभूतिसिद्ध्यर्थे-**सुखमात्यन्तिकं यत्तत्** (गीता-६.२१) इत्याद्युक्तप्रकारेण वैषयिकानन्दविलक्षणस्येतरसमस्तवैतृष्ण्यावहसुखस्वभावप्रत्यगात्म-साक्षात्कारविशेषरूपसिद्धिविशेषप्रयोजने इत्यर्थः। **पूर्वषट्केन चोदिते**-कर्तव्यतयानुशिष्टे, इति यावत्। तादर्थ्यादुपोद्घातरूपस्य प्रथमाध्यायस्य **न त्वेवाहम्** (गीता-२.१२) इत्यतः पूर्वस्य द्वितीयाध्यायैकदेशस्य च तदनुप्रवेशवाचोयुक्तिः। आहुश्चोपोद्घातलक्षणम्-

**चिन्तां प्रकृतिसिद्ध्यर्थामुपोद्घातं प्रचक्षते** इति। एवमनेन श्लोकेन प्रथमषट्कस्यावरतत्त्वविषयव्यवहितोपायपरत्वमुक्तम्॥२॥

**मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये।**
**ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः॥३॥**

अथ मध्यमषट्कस्य परतत्त्वविषयाव्यवहितोपायपरत्वमाह। पूर्वश्लोके समासस्थस्यापि षट्कशब्दस्यात्र बुद्ध्या निष्कृष्य विपरिणतस्यानुषङ्गः। भगवच्छब्दो मध्यमषट्कोक्तसकलजगदेक-कारणत्वनिर्दोषत्वकल्याणत्वयोगिनि परस्मिन् ब्रह्मणि प्रत्यक्षरं प्रकृतिप्रत्ययरूढिभिश्च भगवत्पराशरादिभिर्निरुक्तो द्रष्टव्यः। यस्यैष सङ्ग्रहः-

*अत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः।*
*शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः॥* इति।

अयं च ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वे निदर्शनतया शारीरकभाष्यारम्भे दर्शितः **भगवच्छब्दवत** इति। भक्तेषु भागवतसमाख्या च भजनीये भगवच्छब्दस्य नामधेयतां व्यनक्ति। भगवानेव तत्त्वं भगवत्तत्त्वं, तत्त्वमिह प्रामाणिकः पदार्थः। तत्त्वेन प्रवेष्टुमित्यस्यार्थं व्यनक्ति- **याथात्म्यावाप्तिसिद्धये** इति। ऐश्वर्यादिपुरुषार्थान्तरोक्तेरात्मानन्यार्थत्वमनेन सूचितम्। याथात्म्यमत्रानवच्छेदेन पुष्कलमनारोपितं रूपम्। अवाप्तिरनवच्छिन्नानन्दतयानुभूतिः, सैव सिद्धिः। पुरुषार्थकाष्ठारूपत्वात्तस्या वा सिद्धिर्लब्धिः। **ज्ञानकर्माभिनिर्वर्त्य** इत्यनेन प्रथममध्यमषट्कयोः क्रमनियामकः सङ्गतिविशेषः सूचितः, तदनुसारेण सप्तमारम्भे भाष्यम्- **प्रथमेनाध्यायषट्केन परमप्राप्यभूतस्य परस्य ब्रह्मणो निरवद्यस्य निखिलजगदेककारणस्य सर्वज्ञस्य सर्वभूतात्मभूतस्य सत्यसङ्कल्पस्य महाविभूतेः श्रीमन्नारायणस्य प्राप्त्युपायभूतं तदुपासनं वक्तुं तदङ्गभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनमुक्तम्।** इदानीं मध्यमेन षट्केन परब्रह्मभूतं परमपुरुषस्वरूपं तदुपासनञ्च भक्तिशब्दवाच्यमुच्यते। तदेतदुतरत्र- **यतः प्रवृत्तिर्भूतानाम्** (गीता-१८.४६) इत्यारभ्य **मद्भक्तिं लभते पराम्** (गीता-१८.५४) इति संक्षिप्य वक्ष्यत इति। भक्तिरेव योगो भक्तियोगः, **योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु** (अमरकोषे नानार्थवर्गे १७९) इति पाठाद्योगशब्दोऽत्र उपायपरः। ध्यानपरत्वेऽपि समान्यविशेषरूपतयान्वयसिद्धिः। **प्रकीर्तितः**- स्वरूपत इति कर्तव्यतातो विषयतः कार्यतश्च प्रकृष्टतया कीर्तित इत्यर्थः॥३॥





**प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम्।**
**कर्मधीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमोदितः॥४॥**

एवं षट्कद्वयोक्तनानाविधतत्त्वहितविशोधनपरं क्रमादन्तिमे षट्के त्रिकद्वयमित्यभिप्रायेणाह- **प्रधानम्**- कारणावस्थमचिद्द्रव्यम्। **पुरुषः**- अचिन्मिश्रावस्थो विशुद्धावस्थश्च। **व्यक्तं** तु महदादि-विशेषान्ततदारब्धदेवतिर्यङ्मनुष्यादिरूपं च कार्यजातम्। **सर्वेश्वरः**- **यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः** (गीता-१५.१७) इत्युक्तः पुरुषोत्तमः। एतेनार्वाचीनपरिच्छिन्नेश्वरव्यवच्छेदः। समाख्या चैषा सार्था भगवतः **अजः सर्वेश्वरः सिद्धः** (विष्णुसहस्रनाम) इति तन्नामपाठात्। एतेषां विवेचनम्- परस्परव्यावर्तको धर्मः, तेन वा पृथक्त्वेनानुसन्धानम्। **कर्मधीर्भक्तिरिति**- कर्मयोगादीनां स्वरूपग्रहणम्। इति- निर्दिष्टपदार्थवर्गः आदिर्यस्य स इत्यादिः। आदिशब्देन तदुपादानप्रकारः तदुपयुक्तशास्त्रवश्यत्वादिकं च गृह्यते। **पूर्वशेष**- इत्यनेन प्रकृतशोधनरूपतया पुनरुक्तिपरिहारः सङ्गतिप्रदर्शनञ्च। अयं श्लोकस्त्रयोदशारम्भभाष्येण स्पष्टं व्याख्यातः। पूर्वस्मिन् षट्के परमप्राप्यस्य परस्य ब्रह्मणो भगवतो वासुदेवस्य प्राप्त्युपायभूतभक्तिरूपभगदुपासनाङ्गभूतं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनं ज्ञानयोगकर्मयोगलक्षणनिष्ठाद्वयरूपसाध्यमुक्तम्। मध्यमे च परमप्राप्यभूतभगवत्तत्त्वयाथात्म्यतन्माहात्म्यज्ञानपूर्विकैकान्तिक-भक्तियोगनिष्ठा प्रतिपादिता। अतिशयतैश्वर्यापेक्षाणामात्म-कैवल्यमात्रापेक्षाणां च भक्तियोगस्तत्तदपेक्षितसाधनमिति चोक्तम्। इदानीमुपरीतने तु षट्के प्रकृतिपुरुषतत्संसर्गरूपप्रपञ्चेश्वर-तद्याथात्म्यकर्मज्ञानभक्तिस्वरूपतदुपादानप्रकाराश्च षट्कद्वयोदिता

विशोध्यन्त इति। अत्र त्रिकभेदविवक्षा च षोडशारम्भे दर्शिता, **अतीतेनाध्यायत्रयेण प्रकृतिपुरुषयोर्विभक्तयोः संसृष्टयोः याथात्म्यं तत्संसर्गवियोगयोश्च गुणसङ्गतद्विपर्ययहेतुकत्वं, सर्वप्रकारेणा- वस्थितयोः प्रकृतिपुरुषयोर्भगवद्विभूतित्वं, विभूतिमतो भगवतो विभूतिभूतादचिद्वस्तुनश्चिद्वस्तुनश्च बद्धमुक्तोभयरूपादव्ययत्व- व्यापनभरणस्वाम्यैरर्थान्तरतया पुरुषोत्तमत्त्वेन च याथात्म्यञ्च वर्णितम्** (गीताभाष्ये अ.१६) इति। तदत्र तृतीयषट्के तत्त्वविशोधनपरं प्रथमत्रिकम्। अनुष्ठानशोधनपरं द्वितीयमिति प्रायिकतयायं विभागो ग्राह्यः॥४॥

**अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम्।**
**पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्॥५॥**

एवं शास्त्रार्थः षट्कत्रयार्थश्च चतुर्भिः श्लोकैः सङ्गृहीतः। इतः परमष्टादशभिः प्रत्यध्यायमर्थाः सङ्गृह्यन्ते। तत्र शोकतदपनोदन- रूपकथावान्तरसङ्गत्या महर्षिणा प्रथमद्वितीयाध्यायविभागे कृतेऽपि शास्त्रैतदुपोद्घातरूपार्थविभागज्ञापनाय द्वितीयैकदेशमपि प्रथमश्लोकेन सङ्गृह्णाति। तद्व्यञ्जनाय च **तमुवाच हृषीकेश** (गीता-२.१०) इत्यस्मात्पूर्वमर्थव्याख्यानपूर्वकमयं श्लोको भाष्यकारैरुदाहृतः। एवमस्थाने समुपस्थितस्नेहकारुण्याभ्यामप्रकृतिङ्गतं क्षत्रियाणां युद्धं परमधर्ममप्यधर्मं मन्वानं धर्मबुभूत्सया च शरणागतं पार्थमुद्दिश्य आत्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विनास्य मोहो न शाम्यतीति मत्त्वा भगवता परमपुरुषेण अध्यात्मशास्त्रावतरणं कृतम्। तदुक्तम्-

**अस्थानस्नेहकारुण्यधर्माधर्मधिया कुलम्।**
**पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्** इति।





अस्थानस्नेहकारुण्याभ्यां जाता धर्माधर्मधीरस्थानस्नेहधर्माधर्मधीरिति अत्र भाष्याभिप्रायः। **बन्धुस्नेहेन परया च कृपया धर्मभयेन च अतिमात्रसन्नसर्वाङ्गः** (गीताभाष्ये-अ-१६) इति प्रथमाध्यायान्तभाष्यानुसारेण। **धर्माधर्मभयाकुलम्** इतिपाठे त्रयाणां द्वन्द्वः। धर्माधर्मभयं रज्जुसर्पभयमितिवत्। **उद्दिश्य**-व्याजीकृत्येत्यर्थः। तदेतत्सूचितमारम्भे **पाण्डुतनययुद्धप्रोत्साहनव्याजेन** इति। प्रपन्नत्वात्तमुद्दिश्येति विवक्षितम्। तदपि सूचितम्। **अस्य मोहो न शाम्येति मत्त्वा** इति। तदत्र **तमुवाच** इत्यादिश्लोकत्रयपर्यन्तो ग्रन्थः शास्त्रावताररूपः। तावत्सङ्ग्रहणयात्र श्लोके प्रथमाध्याय इत्यनुक्तिः। अस्ति ह्युत्तरेषु सप्तदशसु तत्तदध्यायग्रहणम्। अनन्तरे च सङ्ग्रहश्लोके **न त्वेवाहं जातु नासम्** इत्यादेरर्थमभिप्रेत्य द्वितीयग्रहणम्। स च द्वितीयान्ते व्याख्यानपूर्वकमुद्धृतः- **एवमात्मयाथात्म्यं युद्धाख्यस्य कर्मणस्तत्प्राप्तिसाधनतामजानतः शरीरात्मज्ञानेन मोहितस्य तेन मोहेन युद्धान्निवृत्तस्यास्य मोहशान्तये नित्यात्मविषया साङ्ख्यबुद्धिस्तत्पूर्विका च असङ्गकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः स्थितप्रज्ञतायोग- साधनभूता द्वितीयाध्याये प्रोक्ता।** तदुक्तम्-
**नित्यात्मासङ्ग....मोहशान्तय** इति।

**नित्यात्मासङ्गकर्मेहागोचरा साङ्ख्ययोगधीः।**
**द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये॥६॥**

सङ्ख्यया बुद्ध्या अवधारणीयमात्मतत्त्वं साङ्ख्यम्, तद्विषयबुद्धिः साङ्ख्यधीः, नित्यात्मगोचरेति तद्विवरणम्। एवमत्र असङ्गकर्मेहाशब्देनापि योगशब्दार्थविवरणादपौनरुक्त्यम्। स्थितधीः-

स्थितप्रज्ञता, ज्ञाननिष्ठेत्यर्थः। सा साध्यत्वेन लक्षं यस्याः सा तथोक्ता। तन्मोहशान्तये- उक्तप्रकारार्जुनस्य देहात्मादिभ्रमनिवृत्यर्थम्। एवं द्वितीयाध्यायोक्तस्य प्रपञ्चनरूपतया षष्ठान्तानां चतुर्णामेक-पेटिकात्वम् एकीकरणार्थं तृतीयारम्भे भाषितम्-

**तदेवं मुमुक्षुभिः प्राप्यतया वेदान्तोदितनिरस्तनिखिला-विद्यादिदोषगन्धानवधिकातिशयासङ्ख्येयकल्याणगुणगण-परब्रह्मपुरुषोत्तमप्राप्त्युपायभूतवेदनोपासनध्यानादिशब्दवाच्य-तदैकान्तिकात्यन्तिकभक्तिं वक्तुं तदङ्गभूतं 'य आत्मा अपहतपाप्मा' इत्यादिप्रजापतिवाक्योदितं प्राप्तुरात्मनो याथात्म्यदर्शनं तन्नित्यताज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञान-योगसाध्यमुक्तम्- इत्यारभ्य 'अतः परमध्यायचतुष्टयेन इदमेव प्राप्तुः प्रत्यगात्मनो दर्शनं ससाधनं प्रपञ्च्यते''** इति॥६॥

**अशक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम्।**
**सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता॥७॥**

**अशक्त्या**- परमपुरुषप्रीतिव्यतिरिक्तस्वर्गादिफलसङ्गत्याग-पूर्वकमित्यर्थः। **लोकरक्षायै** अनुविधेयानुष्ठानस्य कृत्स्नविदः स्वानुष्ठानानुसन्धानेन अकृस्नविदः शिष्टलोकस्य निष्प्रमादलुण्टाक-रहितघण्टापथप्रवर्तनार्थमित्यर्थः। एतेन लोकसङ्ग्रहशब्दो व्याख्यातः। एवं लोकरक्षणार्थं प्रवृत्तेरन्ततः स्वरक्षापर्यन्तं भाष्योक्तम्-

**अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत्** इति। **गुणेषु** सत्त्वरजस्तमस्संज्ञकेषु प्रकृतिगुणेष्वित्यर्थः। **आरोप्य कर्तृताम्**- स्वस्य देशकालावस्थादिनियतविषयज्ञानचिकीर्षाप्रयत्नाश्रयत्वलक्षणां कर्तृतां गुणप्रयुक्ततया अनुसन्धायेत्यर्थः। तथा च भाष्यम्- **गुणेषु**





**कर्तृत्वानुसन्धानं च इदमेवात्मनो न स्वरूपप्रयुक्तमिदं कर्तृत्वम्, अपितु गुणसम्पर्ककृतमिति प्राप्ताप्राप्तविवेकेन गुणकृत-मित्यनुसन्धानम्** इति। **'मयि सर्वाणि कर्माणि'** इत्यत्रास्मच्छब्दा-भिप्रेतं व्यनक्ति- **सर्वेश्वरे वा न्यस्येति।** गुणानां तदाश्रयस्य त्रिगुणद्रव्यस्य तत्संसृष्टस्य वियुक्तस्य च जीवस्य नियन्तरि भगवति तस्यास्तन्मूलत्वभावनया निवेश्येत्यभिप्रायः। सूत्रकारश्च **'कर्ता शास्त्रार्थवत्त्वात्'** (ब्रह्मसूत्रे २.३.३३) इत्यात्मनः कर्तृत्वमुपपाद्य अनन्तरं तस्य परमात्माधीनत्वं **'परात्तु तच्छ्रुतेः** (ब्रह्मसूत्रे २.३.४०)' इत्याह। सर्वेश्वरे कर्तृत्वानुसन्धानप्रकारश्चैवं भाषितः-

**'इदानीमात्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूप-निरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते'**(गीताभाष्ये-३.३०) इति। पिण्डितार्थश्च दर्शितः- **'स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैः स्वाराधनैकप्रयोजनाय परमपुरुषः सर्वशेषी सर्वेश्वरः स्वयमेव स्वकीयकर्माणि कारयति'**(गीताभाष्ये-३.३०) इत्यादिना। ॥७॥

**प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मतास्य च।**
**भेदा ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते॥८॥**

स्वशब्देनावतीर्णावस्थो भगवानिह विवक्षितः। तस्य स्वभावः स्वासाधारणो भावः, स्वस्वभावोक्तिरुच्यत इत्योदनपाकः पच्यत इतिवत्, क्रियत इत्यर्थः। कर्मणोऽकर्मता **'कर्मण्यकर्म यः पश्येत्'** इत्यादिभिरुक्ता, अकर्मशब्दोऽत्र तदन्यवृत्त्या कर्मयोगासन्नात्मविषयः, अस्य च भेदाः **''दैवमेवा परे यज्ञम्''** (गीता ४.२५) इत्यादिनोक्ताः। देवार्चनेन्द्रियनिरोधप्राणायामयागदानहोमतपस्तीर्थसेवास्वाध्याय-

तदर्थाभ्यासादिरूपा वर्णाश्रमधर्मेतिकर्तव्यताका यथाज्ञानं यथाशक्ति यथारुचि प्रधानतया परिगृहीताः कर्मयोगावान्तरविशेषा इत्यर्थः। **ज्ञानस्य माहात्म्यम्- 'श्रेयान् द्रव्यमयाद्यज्ञात्'** इत्युक्तं प्राधान्यम्। अयं च श्लोकस्तृतीयसङ्गतिपूर्वकं चतुर्थारम्भे व्याख्यातः। **''तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोः सहसा ज्ञानयोगेऽनधिकारात्कर्मयोग एव कार्यः, ज्ञानयोगाधिकारिणोऽपि अकर्तृत्वानुसन्धानपूर्वककर्मयोग एव श्रेयानिति सहेतुकमुक्तम्, शिष्टतया व्यपदेशस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तम्। चतुर्थेन इदानीमस्यैव कर्मयोगस्य निखिलजगदुद्धरणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वा अन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारतां प्रदर्श्य कर्मयोगस्वरूपं तद्भेदः कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते, प्रसङ्गाच्च भगवदवतार-याथात्म्यमुच्यते''** इति। ईदृशं चावतारमाहात्म्यमत्र निरमन्थि- निखिलहेयप्रत्यनीककल्याणतानस्यापि भगवतो जन्म नेन्द्रजालवन्मिथ्या, अपितु सत्यम्, अवतरँश्च भगवानस्मदादिवन्न ज्ञानसङ्कोचादिमान् भवति, किन्तु अजत्वाव्ययत्वसर्वेश्वरत्वादिकं सर्वं पारमेश्वरं स्वभावजमजहदेवावतरति, न चावतारविग्रहोऽप्यस्य गुणत्रयमयः प्राकृतः, प्रत्युत अप्राकृतशुद्धसत्त्वमयः, न चास्य जन्म पुण्यापुण्यरूपेण कर्मणा, अपितु स्वेच्छयैव, न वा कर्मविपाककाले अस्य जन्म, अपि तु धर्मग्लान्यधर्मोत्थानकाले, नापि भगवज्जन्मनः सुखदुःखमिश्राणि फलानि, अपि तर्हि साधुपरित्राणदुष्कृद्विनाशनधर्मसंस्थापनादीनीति स्वरूपतः प्रकारतो द्रव्यतः कारणतः प्रयोजनतश्च दिव्यत्वम्। एवं जानतश्चैकस्मिन्नेव





जन्मनि उपायपूर्त्यानन्तरजन्मप्रतिषेधेन भगवत्प्राप्तिर्गीयते **'जन्म कर्म च मे दिव्यम्'** इत्यादिना,; अत एव हि प्राचेतस-पाराशर्यशुकशौनकादयः परमर्षयः प्रायस्तत्रैव निष्ठां भूयसीमाद्रियन्ते- इति॥८॥

**कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः।**
**ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते॥९॥**

तृतीयचतुर्थाभ्यां यथांशं सङ्गतिप्रदर्शनपूर्वकमयं श्लोकः पञ्चमारम्भे व्याख्यातः। चतुर्थेऽध्याये कर्मयोगस्य ज्ञानाकारता-पूर्वकस्वरूपभेदः, ज्ञानांशस्य च प्राधान्यमुक्तम्। ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुशकत्त्वान्निरपेक्षत्वाच्च ज्यायस्त्वं तृतीय एवोक्तम्। इदानीं कर्मयोगस्यात्मप्राप्तिसाधनत्वे ज्ञाननिष्ठायाः शैघ्र्यम्, कर्मयोगान्तर्गताकर्तृत्वानुसन्धानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च विशोध्यत इति। सौकर्यस्यात्रानुद्धरणं पूर्वोक्तानुवादताज्ञापनार्थम्। सौकर्यशब्देनात्र **'सुखं बन्धात्प्रमुच्यते'** (गीता ५.३) इत्यस्य हेतुर्दर्शितः। शैघ्र्यं तु **'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति'** (गीता ५.६) इत्युक्तम्। अत्र विधाशब्द इतिकर्तव्यतापरः, तथा खलु **'नैव किञ्चित्करोमि'** इत्यादेरधिष्ठिका- **'यतः सौकर्याच्छैघ्र्याच्च कर्मयोग एव श्रेयान् अतस्तदपेक्षितं शृणु'** (गीताभाष्ये--५.८अवतारिका) इति। अकर्तृत्वानुसन्धानप्रकार-शब्दोऽप्येतत्परः। ब्रह्मशब्दोऽत्र ब्रह्मसमानाकार- शुद्धात्मविषयः। ज्ञानशब्दश्चात्र समदर्शनरूपज्ञानविपाकविश्रान्तः। प्रकारशब्दस्तु तद्धेतुभूतप्रकारार्थः। अत एव हि **'येन प्रकारेणावस्थितस्य कर्मयोगिनः समदर्शनरूपो ज्ञानविपाको भवति ते**

**प्रकारमुपदिशति'** (गीताभाष्ये ५.२९ अवतरणिका) इत्युक्त्वा **'न प्रहृष्येत्प्रियं प्राप्य'** (गीता ५.२) इत्यादिकमवतारितम्। षष्ठारम्भस्त्वेवं सङ्गमितः- **'उक्तः कर्मयोगः सपरिकरः, इदानीं ज्ञानयोगसाध्यात्मावलोकनरूपयोगाभ्यासविधिरुच्यते, तत्र कर्मयोगस्य निरपेक्षस्य निरपेक्षयोगसाधनत्वं द्रढयितुं ज्ञानाकारः कर्मयोगो योगशिरस्कोऽनूद्यते'** इति। एतेन **'योगी युञ्जीत'** इत्यतः पूर्वस्य ग्रन्थस्यानुवादरूपत्वात्सङ्ग्रहे नोपन्यास इति व्यञ्जितम्॥९॥

**योगाभ्यासविधिर्योगी चतुर्धा योगसाधनम्।**
**योगसिद्धिः स्वयोगस्य पारम्यं षष्ठ उच्यते॥१०॥**

ननु अत्र पञ्चार्थाः सङ्गृहीताः, भाष्ये तु कथमेकः? इत्थम्, **'स्पर्शान् कृत्वा बहिर्बाह्यान्'** (गीता५.२७) इत्यादिना पञ्चमे प्रस्तुतो योगाभ्यासविधेरेवात्र प्रपञ्च्यत इति तत्प्रधानोऽयमध्यायः, तदनुबन्धाः प्रसङ्गादन्ये प्रतिपाद्यन्त इति। एतेनाध्यायान्तरेष्वप्यनेकानुबन्ध एकैकार्थः प्रधानतम इति सूचितम्। तद्यथा- श्रवणाधिकारी, तन्मोहशमनं, कर्मयोगकर्तव्यत्वम्, तदवान्तरभेदः, तदन्तर्गतज्ञानविपाकः, योगाभ्यासविधिः, प्रतिबुद्धप्राधान्यम्, त्रिविधाधिकारवेद्योपादेयविभागः, सप्रकारो भक्तियोगः, गुणविभूत्यानन्त्यम्, वैश्वरूप्यदर्शनोपायः, भक्त्यारोहक्रमः, विशुद्धक्षेत्रज्ञविज्ञानम्, त्रैगुण्यविशोधनम्, पुरुषोत्तमवैलक्षण्यम्, शास्त्रवश्यत्वम्, शास्त्रीयविवेचनम्, सारोद्धारः इति। अतोऽत्र योगाभ्यासविध्यनुबन्धत्वेन योगे चातुर्विध्यादिप्रदर्शनम्। योगी चतुर्धा- **'सर्वभूतस्थमात्मानम्** (गीता६.२९)





इत्यादिश्लोकचतुष्टयोदितसमदर्शनचातुर्विध्यात्। तत्र ह्येवं भाष्यम्- **'अथ योगविपाकदशा चतुष्प्रकारोच्यते'** इति। एवं तत्र समदर्शनविपाकक्रमोऽभिप्रेतः- आत्मनां ज्ञानत्वानन्दत्वादिभिरन्योन्यसाम्यदर्शनम्, शुद्धावस्थायामपहतपाप्मत्वादिभिरीश्वरेण साम्यदर्शनं परित्यक्तप्राकृतभेदानामसङ्कुचितज्ञानैकाकारतया ईश्वरेण तदपृथक्सिद्धविशेषणत्वादिभिरन्योन्यं च साम्यदर्शनम्, औपाधिकैः पुत्रादिभिरसम्बन्धसाम्यदर्शनं चेति। योगसाधनम्- अभ्यासवैराग्यादिकम्। योगसिद्धिः- योगभ्रष्टस्यापि प्रत्यवायविरहः, पुण्यलोकाद्यवाप्तिः, विच्छिन्नप्रतिसन्धानाद्यनुरूपविशिष्टकुलोत्पत्तिः, अभिक्रमनाशाभावेन क्रमाच्छेषपूरणेनापवर्गाविनाभावः- इत्येवंरूपा। स्वयोगस्य पारम्यं- वक्तुर्भगवतो वासुदेवस्य भजनरूपो योगोऽत्र स्वयोगः, तस्य पारम्यं स्वापेक्षयोत्कृष्टराहित्यम्। एतच्च मध्यमषट्कप्रतिपाद्यमपि तत्प्रस्तावनारूपेण **'योगिनामपि सर्वेषाम्'** (गीता६.४७) इति प्रथमषट्कान्तिमश्लोकन दर्शितम्, तथाहि तत्र भाष्यम्- **'तदेवं परविद्याङ्गभूतप्रजापतिवाक्योदितं प्रत्यगात्मनो दर्शनमुक्तम्, अथ परविद्यां प्रस्तौति'** इति॥१०॥

**स्वयाथात्म्यं प्रकृत्यास्य तिरोधिः शरणागतिः।**
**भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते॥११॥**

तत्र भाष्यम्- **'सप्तमे तावदुपास्यभूतपरमपुरुषस्वरूपयाथात्म्यम्, प्रकृत्या तत्तिरोधानम्, तन्निवृत्तये भगवत्प्रपत्तिः, उपासकविधाभेदः, ज्ञानिनः श्रैष्ठ्यं चोच्यते'** इति। तत्र प्रकृतिशब्देन **'मम माया दुरत्यया'** इति मायाशब्दो व्याख्यातः। **'गुणमयी'** इति विशेषणात्सैव हि विवक्षितेति गम्यते;

श्रुतावपि 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' (श्वेताश्वतरोपनिषदि ४.९) इति प्रस्तुतयोर्मायातद्वतोः 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वेताश्वतरोपनिषदि ४.१०) इति स्वयमेव विवरणाच्च, अतो विचित्रसृष्ट्युपकरणवस्तुत्वात्, प्रकृताविह मायाशब्दप्रयोग इति भावः। अष्टमारम्भसङ्गतौ चैतच्छ्लोकार्थः स्पष्टमभिहितः। 'सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यत्वम्, निखिलचेतनाचेतनवस्तुशेषित्वम्, कारणत्वम्, आधारत्वम्, सर्वशरीरतया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वम्, सर्वनियन्तृत्वम्, सर्वैश्च कल्याणगुणैस्तस्यैव परतरत्वम्, सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिकालप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानमत्युत्कृष्टसुकृतहेतुकभगवत्प्रपत्त्या च तन्निवर्तनम्, सुकृततारतम्येन प्रतिपत्तिवैशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षया च उपासकभेदम्, भगवन्तं प्रेप्सोर्नित्ययुक्ततया एकभक्तितया चात्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यम्, दुर्लभत्वञ्च प्रतिपाद्य एषां त्रयाणां ज्ञातव्योपादेयभेदाँश्च प्रास्तौषीत्' इति॥११॥

**ऐश्वर्याक्षरयाथात्म्यभगवच्छरणार्थिनाम्।**
**वेद्योपादेयभावानामष्टमे भेद उच्यते॥१२॥**

ऐश्वर्यमत्रेन्द्रप्रजापतिपशुपतिभोगेभ्योऽतिशयितभोगः, अक्षरयाथात्म्यम्- विविक्तात्मस्वरूपम्, वेद्यास्तु 'अक्षरं ब्रह्म परमम्' इत्यादिनोक्ताः शुद्धात्मस्वरूपप्रभृतयः, उपादेयास्तु- तत्तदिष्टफलानुरूपपरमपुरुषचिन्तनान्तिमप्रत्ययगतिचिन्तनादयः। त एव भावाः पदार्थाः, तेषां भेदः तत्तदधिकारानुरूपो विशेषः॥१२॥





**स्वमाहात्म्यं मनुष्यत्वे परत्वं च महात्मनाम्।**
**विशेषो नवमे योगो भक्तिरूपः प्रकीर्तितः॥१३॥**

स्वमाहात्म्यम्- 'मया ततमिदं सर्वम्' (गीता-९.४) इत्यादिभिः शोधितम्। 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो ममाव्ययमनुत्तमम्' (गीता-९.११) इति परत्वस्य मनुष्यदशायामपि अव्ययत्वमुक्तम्; प्रस्तुतावतारविवक्षया मनुष्यावस्थत्वोक्तिः, तन्मुखेन सर्वेष्वप्यवतारेषु अव्ययः परमो भाव उपलिलक्षयिषितः। उक्तञ्च श्रीवत्सचिह्नमिश्रैः-

परो वा व्यूहो वा विभव उत वार्चावतरणो
भवन् वान्तर्यामी वर वरद यो यो भवसि वै।
स स त्वं सन्नैशान् वरगुणगणान् बिभ्रदखिलान्
भजद्भ्यो भास्येवं सततमिरेभ्यस्त्वितरथा॥इति।(वरदराजस्तवे.१८)

'महात्मानस्तु मां पार्थ' (गीता-९.१३) इत्यादिना महात्मनां विशेषो विशोधितः। अत्र भक्तिरूपस्य योगस्यैव प्राधान्यं भाष्योक्तम्- 'उपासकभेदनिबन्धनाविशेषाः प्रतिपादिताः; इदानीमुपास्यस्य परमपुरुषस्य माहात्म्यम्, ज्ञानिनां विशेषं च विशोध्य भक्तिरूपस्योपासनस्य स्वरूपमुच्यते' इति॥१३॥

**स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनतामतिः।**
**भक्त्युत्पत्तिविवृद्ध्यर्था विस्तीर्णा दशमोदिता॥१४॥**

अत्र नवमसङ्गतिपूर्वकं भाष्यम्- 'भक्तियोगः सपरिकर उक्तः, इदानीं भक्त्युत्पत्तये तद्विवृद्धये भगवतो निरङ्कुशैश्वर्यादिकल्याणगुणानन्त्यं वक्तुं कृत्स्नस्य जगतस्तच्छरीरतया

